॥ श्रीः ॥

# श्रीमद्वाल्मीकिरामायणम् ।

श्रीमद्गोविन्दराजीय-रामानुजीय-तनिश्लोकी-
माहेश्वरतीर्थीयाख्यव्याख्याचतुष्टयसहितम् ।

मुनिभावप्रकाशिकादिव्याख्योद्धृत-
टिप्पणीसमलङ्कृतं च ।

## प्रथमो भागः ।

काण्डद्वयात्मकः ।

गंगाविष्णु श्रीकृष्णदास,
अध्यक्षः-"लक्ष्मीवेङ्कटेश्वर"-मुद्रणालयः,
कल्याण-बम्बई.

संवत् १९९२, शके १८५७.

॥ श्रीरस्तु ॥

श्रीरघुनन्दनपरब्रह्मणे नमः ।

# श्रीमद्वाल्मीकिरामायणप्रधानविषयानुक्रमणिका ।

विषयाः — सर्गाङ्काः

## ॥ अथ बालकाण्डानुक्रमणिका ॥


परमकारुणिको भगवान् वाल्मीकिर्निखिलवेदान्तविदितपरतत्त्वनिदिधारयिषया यदृच्छयोपागतं नारदं पृष्ट्वा अवगतपरतत्त्वस्वरूपस्तदनुप्रसन्नेन विधिना दत्तसकलसाक्षात्कारप्रबन्धनिर्माणशक्तिर्वेदोपबृंहणमारभमाणस्तस्यार्थप्रधानसुहृत्संमितेतिहासतां व्यङ्ग्यप्रधानकान्तासंमितकाव्यतां च पुरस्कुर्वन् “ काव्यालापांश्च वर्जयेत् ” इति निषेधस्यासत्काव्यविषयतां च निर्धारयन् स्वग्रन्थे प्रेक्षावतां प्रवृत्त्यर्थं तदङ्गानि दर्शयामास प्रथमतश्चतुःसर्ग्या। तत्र विषयप्रयोजने प्रादर्शयत्प्रथमसर्गे १

अथ “ इष्टं हि विदुषां लोके समासव्यासधारणम् ” इत्युक्तरीत्या संक्षेपेणोक्तं रामचरित्रं पुनर्विस्तरेण प्रतिपिपादयिषुस्तत्र प्रेक्षावत्प्रवृत्त्यर्थं वक्तृवैलक्षण्यं प्रबन्धवैलक्षण्यं प्रतिपाद्यवैलक्षण्यं चेति वैलक्षण्यत्रयं दिदर्शयिषुर्वक्तृवैलक्षण्यं तावदादावदर्शयन्नारदस्येत्यादौ द्वितीयसर्गे २

अथ विषयवैलक्षण्यमदर्शयत्तृतीये ३

अथ प्रबन्धवैलक्षण्यं प्रादर्शयच्चतुर्थे ४

अथ भगवदवतारयोग्यं देशमदर्शयत्पञ्चमे ५

अथ भगवदवतारयोग्यं पुरुषवरमदर्शयत्षष्ठे ६

अथ भगवदवतारयोग्यात्मगुणसंपन्नस्य दशरथस्य धर्मानुष्ठानसाहाय्यसाधिष्ठसचिवसम्पत्तिमदर्शयत्सप्तमे ७

अथ तादृशस्य दशरथस्य भगवदवतारोपयुक्ततदाराधनोपक्रममदर्शयदष्टमे ८

अथ तदुपयुक्तर्त्विक्सम्पादनाय पुरावृत्तज्ञसुमन्त्रमुखेन ऋश्यशृङ्गरोमपादसमागमकथां संग्रहेणादर्शयन्नवमे ९

अथ ऋश्यशृङ्गानयनं विस्तरेणादर्शयद्दशमे १०

अथ ऋश्यशृङ्गरचितपुत्रकामेष्ट्या दशरथस्य पुत्रचतुष्टयलाभ इति सनत्कुमारकथितकथाश्रवणेन दशरथस्य स्वपुरं प्रति ऋश्यशृङ्गानयनमदर्शयदेकादशे ११

अथ तस्य ऋश्यशृङ्गवसिष्ठादिभिः सह चिकीर्षिताऽश्वमेधसंकल्पमश्वविमोचनं च प्रादर्शयद्द्वादशे १२

अथ तस्य तुरगविमोचनमारभ्य संवत्सरे पूर्णे देवयजनं प्रति प्रस्थानं, वसिष्ठस्य सुमन्त्रर्त्विक्प्रभृतीन् प्रति यज्ञौपयिककार्यनियोजनं चादर्शयत्त्रयोदशे १३

अथ तस्याश्वमेधानुष्ठानं सप्रकारमदर्शयच्चतुर्दशे १४

अथ दशरथप्रार्थितेन ऋश्यशृङ्गेण पुत्रकामेष्टिकरणं, तद्व्याजेन साधुलोकरक्षणाय भूमाववतितीर्षोर्भगवत आनुषङ्गिकदुष्कृद्विनाशाय देवैः प्रार्थनं चादर्शयत्पञ्चदशे १५

अथ सर्वज्ञस्यापि भगवतो देवसङ्घबहुमानाय तत्सकाशाद्रावणवधोपायश्रवणं, वैतानिकाग्नेर्दिव्यपायसपात्रहस्तस्य प्राजापत्यपुरुषस्योत्थानम्, दशरथेन तत्सकाशात् पायसप्रतिग्रहणम्, कौसल्यादिभ्यः क्रमेण तत्प्रदानम्, तासां गर्भधारणं चादर्शयत्षोडशे १६

अथावतरिष्यतो भगवतः सहायार्थं वानरादिसृष्टये देवान् प्रति ब्रह्मणो नियोजनम्, तथैव देवैर्वानरसृष्टिम्, वानराणां भगवत्साहाय्योपयुक्तशौर्यादिसमृद्धिं चादर्शयत् सप्तदशे १७

अथ भगवतः सपर्यङ्कस्य सहेतिराजस्य श्रीरामादिरूपेणावतारम्, लक्ष्मणादीनां विशेषतः श्रीरामभद्रस्य च कल्याणगुणान्, तेषां जातकर्माद्युपनयनान्तसंस्कारकरणम्, तत्समये विश्वामित्रागमनं चादर्शयदष्टादशे १८

अथ स्वयागरक्षणव्याजेन रामादीन् कन्यारत्नैर्युयोजयिषोर्विश्वामित्रस्य दशरथं प्रति रामलक्ष्मणाभ्यर्थनमदर्शयदेकोनविंशे १९

अथ कौशिकवचनश्रवणाद्रामविश्लेषचिन्तया दशरथविषादमदर्शयद्विंशे २०

अथ रामप्रेषणवृत्तान्तव्याकुलस्य राज्ञो वसिष्ठेन प्रतिबोधनमदर्शयदेकविंशे २१

अथ प्रसन्नहृदयेन राज्ञा विश्वामित्रेण सह रामलक्ष्मणप्रेषणं, विश्वामित्रसकाशाद्रामलक्ष्मणयोर्बलातिबलाख्यविद्याद्वयलाभं चादर्शयद्द्वाविंशे २२

अथ कामाङ्गदेशप्राप्तिं विश्वामित्रेण रामं प्रति तत्रत्यपूर्ववृत्तकथनव्याजेन व्यञ्जयत्त्रयोविंशे २३

अथ विश्वामित्रेण रामस्य मलदकरूशदेशयोस्तत्संज्ञालाभकारणम्, ताटकास्वभावं चादर्शयच्चतुर्विंशे २४

अथ रामस्य विश्वामित्रेण ताटकोत्पत्तिविवाहपुत्रलाभागस्त्यशापादिकथनम्, लोकोपद्रवकारिण्यास्तस्या वधे पूर्वाचारनिदर्शनेन दोषाभावकथनं चादर्शयत्पञ्चविंशे २५

अथ ताटकावधपूर्वकं तद्वने तस्यां रात्रौ रामादीनां निवासमदर्शयत्षड्विंशे २६

अथ रामस्य विश्वामित्रसकाशादस्त्रगणलाभमदर्शयत्सप्तविंशे २७

अथास्त्रोपसंहारकप्रतिग्रहमदर्शयदष्टाविंशे २८

अथ रामं प्रति सिद्धाश्रमस्य तत्संज्ञालाभनिमित्तावगमायात्रैवादितिकाश्यपयोर्वामनावतारसिद्धिम्, श्रीवामनस्य बलिनिरासनसिद्धिम्, पुनर्वामनस्यात्र चिरकालसन्निधिरूपां च सिद्धिम्, विश्वामित्रकथितां विश्वामित्रस्य यज्ञदीक्षां चादर्शयदेकोनत्रिंशे २९

अथ रामकृतं सुबाहुमारीचप्रभृतिदुष्टनिग्रहमदर्शयत्त्रिंशे ३०

अथ कृतार्थेन विश्वामित्रेण जनकसुतात्वेनावतीर्णया श्रिया रामं योजयितुं व्याजेन मिथिलाप्रस्थानं प्रस्तुतमित्याहैकत्रिंशे ३१

अथ रामेण शोणकूलदेशवैभवे पृष्टे अयं मद्वंश्यानां देश इति विवक्षन् स्वान्वयं प्रादर्शयद्विश्वामित्र इत्याह द्वात्रिंशे ३२

अथ विश्वामित्रकथितं कुशनाभस्य वायुपीडितकन्यावचनं शृण्वतः क्षमाविशेषं, कन्यानां पात्रविशेषे प्रदानं चादर्शयत्त्रयस्त्रिंशे ३३

अथ विश्वामित्रेण पूर्वप्रसक्ता स्ववंशकथा स्वपर्यन्तकथनेन परिसमापितेत्याह चतुस्त्रिंशे ३४

अथ स्वपादोद्भवगङ्गावैभवं लोके प्रवर्तयितुकामेन रामेण गङ्गायास्त्रिपथगात्वं कथमिति पृष्टो विश्वामित्रो देवैरन्तरिक्षमार्गेण स्वर्गलोकनयनान्मार्गद्वयगमनं तस्याः प्रादर्शयदित्याह पञ्चत्रिंशे ३५

अथ गङ्गाया अन्तरिक्षस्वर्गगमनयोः प्रत्युक्तत्वात्तृतीयपक्षगमनं, तस्या दिव्यमानुषसंभववैभवं च रामेण पृष्टो विश्वामित्रस्तदुपयोगितया पार्वतीशिवसङ्गमधातुस्खलनकथामाहेत्याह षट्त्रिंशे ३६

अथ प्रतिज्ञातं स्कन्दोत्पादकत्वरूपं गङ्गाया दिव्यसंभववैभवमाहेत्याह सप्तत्रिंशे ३७

अथ गङ्गाया मानुषलोकसंभवं विस्तरेण

कामो विश्वामित्रः सगरस्य पुत्रगण-
प्रकारं, तस्याश्वमेधोपक्रमं चाकथय-
दाहाष्टात्रिंशे ३८

अथ सगरस्याश्वमेधीयाश्वनाशं, तद्-
णाय पित्रा नियुक्तैः सागरैर्निरपराध-
जन्तुहिंसनपूर्वकमापातालं भूमेः
नं, तद्वृत्तान्तस्य देवैर्ब्रह्मसकाशे कथनं
त्यदर्शयदेकोनचत्वारिंशे ३९

अथ देवान् प्रति सागराणां कापिलेन
ो भविष्यतीति ब्रह्मणः प्रत्युक्तिं,
राणामारसातलं भूमेः खननप्रकारं,
दिग्गजाष्टकदर्शनपूर्वकं कपिलसकाशे
वदर्शनम्, कापिलाभिभवनप्रवृत्तिं, तदैव
कापिलेन भस्मीकरणं चाहेत्यदर्श-
त्वारिंशे ४०

अथ सगरपौत्रेणांशुमता, तन्नियुक्तेन
नयं कपिलसेवनेन, तत्सकाशस्थिता-
यनम्, सगरस्य यज्ञसमाप्तिं, सुपर्णोक्त्या-
वपुत्रगणोत्तरणौपयिकगङ्गानयना-
यैव तस्य स्वर्गगमनं चाहेत्यकथय-
चत्वारिंशे ४१

अथांशुमद्दिलीपयोर्गङ्गानयनाशक्त्यैव
गमनं, ततो भगीरथस्य गङ्गानयनाय
वरणम्, प्रसन्नेन ब्रह्मणा तस्य वरप्रदा-
, रुद्रशिरोवतरणमुखेन गङ्गाया भूम्या-
ानियोजनं चाहेत्यभ्यधात् द्विचत्वारिंशे ४२

अथ पुनर्भगीरथतपःप्रसन्नेन रुद्रेण
सा विष्णुपदीवहनं, बिन्दुसरसि तस्या
र्जनं, गङ्गास्रोतःसु सप्तस्वेकस्य भगी-
थानुगमनं, तस्य च मध्ये जह्नुना तिरो-
नं, पुनर्विसर्जनम्, तेन सगरसुतगण-
भस्मराशिसंप्लावनं, ततः सागराणां
गमनं चाकथयदित्याह त्रिचत्वारिंशे ४३

थ ब्रह्मणा गङ्गाया भागीरथीत्यप-
दाननियोजनम्, भगीरथस्य पितॄन् प्रति
सलिलदानम्, गङ्गावतरणश्रवणमाहात्म्यं
चाहेति प्रत्यपादयच्चतुश्चत्वारिंशे ४४

अथैषां गङ्गातरणपूर्वकं विशालाख्य-
नगरीसमीपगमनसमये तत्रत्यराजवंशं
पृष्टेन विश्वामित्रेण तद्देशीयपूर्ववृत्तान्तमभि
वक्तुकामेन तदुपयुक्ततया क्षीरोदमथन-
लब्धविष्णुदत्तामृतप्राशनेन सदेवसंवस्ये-
न्द्रस्याखिलासुरविध्वंसनपूर्वकं त्रिलोकी-
साम्राज्यं कथितमित्यकथयत्पञ्चचत्वारिंशे ४५

अथ हतपुत्राया दितेरिन्द्रजेतृपुत्रलाभाय
विशालापुरसमीपे सहस्रसंवत्सरं गर्भिण्या-
स्तपश्चरणं, रन्ध्रान्वेषिणेन्द्रेण तस्याः परि-
चरणम्, अप्रायत्यसमये तदुदरं प्रविश्य
तेन सप्तधा गर्भच्छेदनम्, पुनस्तस्याः
प्रसादनं च कथितमित्याह षट्चत्वारिंशे ४६

अथ दितेः सप्तानां गर्भच्छेदानां
सप्तवायुस्कन्धरूपेणेन्द्रसकाशाद्वरलाभम्,
अलम्बुसायामिक्ष्वाकूत्पन्नेन विशालाख्येन
राज्ञा विशालानगरनिर्माणं, तद्वंशं च
तदानींतनसुमत्याख्यराजपर्यन्तं रामाय
कथितवन्तं कौशिकं स्वपुरमागतं सुमति-
रपूजयदित्याह सप्तचत्वारिंशे ४७

अथैषां मिथिलोपकण्ठे शून्याश्रमगमन-
समये तद्वृत्तान्तं रामेण पृष्टः कौशिकस्तत्र
पूर्वं गौतमस्य तपश्चरणम्, अहल्याया
इन्द्रेण धर्षणम्, ततो गौतमस्य स्वपत्न्या-
महल्यायाम् अदृश्यतया शापम्, रामाग-
मनसमये तन्मोक्षणम्, इन्द्रे निर्वृषणत्वेन
शापं चोत्सृज्य हिमवत्प्रान्तगमनं चाक-
थयादित्याहाष्टचत्वारिंशे ४८

अथ पितृदेवदत्तमेषवृषणेनेन्द्रस्य वृषण-
लाभं, कौशिकाज्ञातवतो रामस्य सकौ-
शिकस्य गौतमाश्रमे शापविमुक्तयाऽहल्यया
गौतमेन च पूजनम्, मिथिलागमनं चाहै-

अथावतरिष्यतो भगवतः सहायार्थं वानरादिसृष्टये देवान् प्रति ब्रह्मणो नियोजनम्, तथैव देवैर्वानरसृष्टिम्, वानराणां भगवत्साहाय्योपयुक्तशौर्यादिसमृद्धिं चादर्शयत् सप्तदशे १७

अथ भगवतः सपर्यङ्कस्य सहेतिराजस्य श्रीरामादिरूपेणावतारम्, लक्ष्मणादीनां विशेषतः श्रीरामभद्रस्य च कल्याणगुणान्, तेषां जातकर्माद्युपनयनान्तसंस्कारकरणम्, तत्समये विश्वामित्रागमनं चादर्शयदष्टादशे १८

अथ स्वयागरक्षणव्याजेन रामादीन् कन्यारत्नैर्युयोजयिषोर्विश्वामित्रस्य दशरथं प्रति रामलक्ष्मणाभ्यर्थनमदर्शयदेकोनविंशे १९

अथ कौशिकवचनश्रवणाद्रामविश्लेषचिन्तया दशरथविषादमदर्शयद्विंशे २०

अथ रामप्रेषणवृत्तान्तव्याकुलस्य राज्ञो वसिष्ठेन प्रतिबोधनमदर्शयदेकविंशे २१

अथ प्रसन्नहृदयेन राज्ञा विश्वामित्रेण सह रामलक्ष्मणप्रेषणं, विश्वामित्रसकाशाद्रामलक्ष्मणयोर्बलातिबलाख्यविद्याद्वयलाभं चादर्शयद्द्वाविंशे २२

अथैषामङ्गदेशप्राप्तिं विश्वामित्रेण रामं प्रति तत्रत्यपूर्ववृत्तकथनव्याजेन व्यञ्जयत्त्रयोविंशे २३

अथ विश्वामित्रेण रामस्य मलदकरूश देशयोस्तत्संज्ञालाभकारणम्, ताटकास्वभावं चादर्शयच्चतुर्विंशे २४

अथ रामस्य विश्वामित्रेण ताटकोत्पत्तिविवाहपुत्रलाभागस्त्यशापादिकथनम्, लोकोपद्रवकारिण्यास्तस्या वधे पूर्वाचारनिदर्शनेन दोषाभावकथनं चादर्शयत्पञ्चविंशे २५

अथ ताटकावधपूर्वकं तद्वने तस्यां रात्रौ रामादीनां निवासमदर्शयत्षड्विंशे २६

अथ रामस्य विश्वामित्रसकाशादस्त्रगणलाभमदर्शयत्सप्तविंशे २७

अथास्त्रोपसंहारकप्रतिग्रहमदर्शयदष्टाविंशे २८

अथ रामं प्रति सिद्धाश्रमस्य तत्संज्ञालाभनिमित्तावगमायात्रैवादितिकाश्यपयोर्वामनावतारसिद्धिम्, श्रीवामनस्य बलिनिरासनसिद्धिम्, पुनर्वामनस्यात्र चिरकालसन्निधिरूपां च सिद्धिम्, विश्वामित्रकथितां विश्वामित्रस्य यज्ञदीक्षां चादर्शयदेकोनत्रिंशे २९

अथ रामकृतं सुबाहुमारीचप्रभृतिदुष्टनिग्रहमदर्शयत्त्रिंशे ३०

अथ कृतार्थेन विश्वामित्रेण जनकसुतात्वेनावतीर्णया श्रिया रामं योजयितुं व्याजेन मिथिलाप्रस्थानं प्रस्तुतमित्याहैकत्रिंशे ३१

अथ रामेण शोणकूलदेशवैभवे पृष्टे अयं मद्वंश्यानां देश इति विवक्षन् स्वान्वयं प्रादर्शयद्विश्वामित्र इत्याह द्वात्रिंशे ३२

अथ विश्वामित्रकथितं कुशनाभस्य वायुपीडितकन्यावचनं शृण्वतः क्षमाविशेषं, कन्यानां पात्रविशेषे प्रदानं चादर्शयत्त्रयस्त्रिंशे ३३

अथ विश्वामित्रेण पूर्वप्रसक्ता स्ववंशकथा स्वपर्यन्तकथनेन परिसमापितेत्याह चतुस्त्रिंशे ३४

अथ स्वपादोद्भवगङ्गावैभवं लोके प्रवर्तयितुकामेन रामेण गङ्गायास्त्रिपथगात्वं कथमिति पृष्टे विश्वामित्रो देवैरन्तरिक्षमार्गेण स्वर्गलोकनयनान्मार्गद्वयगमनं तस्याः प्रादर्शयदित्याह पञ्चत्रिंशे ३५

अथ गङ्गाया अन्तरिक्षस्वर्गगमनयोः प्रत्युक्तत्वात्तृतीयपथगमनं, तस्या दिव्यमानुषसंभववैभवं च रामेण पृष्टे विश्वामित्रस्तदुपयोगितया पार्वतीशिवसङ्गमधातुस्खलनकथामाहेत्याह षट्त्रिंशे ३६

अथ प्रतिज्ञातं स्कन्दोत्पादकत्वरूपं गङ्गाया दिव्यसंभववैभवमाहेत्याह सप्तत्रिंशे ३७

अथ गङ्गाया मानुषलोकसंभवं विस्तरेण

कामो विश्वामित्रः सगरस्य पुत्रगण-
प्रकारं, तस्याश्वमेधोपक्रमं चाकथय-
ाहाष्टात्रिंशे ३८

अथ सगरस्याश्वमेधीयाश्वनाशं, तद्-
णाय पित्रा नियुक्तैः सागरैर्निरपराध-
जन्तुहिंसनपूर्वकमापातालं भूमेः
नं, तद्वृत्तान्तस्य देवैर्ब्रह्मसकाशे कथनं
त्यदर्शयदेकोनचत्वारिंशे ३९

अथ देवान् प्रति सागराणां कपिलेन
ो भविष्यतीति ब्रह्मणः प्रत्युक्तिं,
राणामारसातलं भूमेः खननप्रकारं,
दिग्गजाष्टकदर्शनपूर्वकं कपिलसकाशे
दर्शनम्, कपिलाभिभवनप्रवृत्तिं, तदैव
कपिलेन भस्मीकरणं चाहेत्यदर्श-
त्वारिंशे ४०

अथ सगरपौत्रेणांशुमता तन्नियुक्तेन
नयं कपिलसेवनेन तत्सकाशस्थिता-
यनम्, सगरस्य यज्ञसमाप्तिं, सुपर्णोक्त -
पुत्रगणोत्तरणोपायिकगङ्गानयना-
यैव तस्य स्वर्गगमनं चाहेत्यकथय-
चत्वारिंशे ४१

अथांशुमद्दिलीपयोर्गङ्गानयनाशक्त्यैव
गमनं, ततो भगीरथस्य गङ्गानयनाय
रणम्, प्रसन्नेन ब्रह्मणा तस्य वरप्रदा-
, रुद्रशिरोवतरणमुखेन गङ्गाया भूम्या-
ानियोजनं चाहेत्यभ्यधात् द्विचत्वारिंशे ४२

अथ पुनर्भगीरथतपःप्रसन्नेन रुद्रेण
सा विष्णुपदीवहनं, बिन्दुसरसि तस्या
र्जनं, गङ्गास्रोतःसु सप्तस्वेकस्य भगी-
थानुगमनं, तस्य च मध्ये जह्नुना तिरो-
नं, पुनर्विसर्जनम्, तेन सगरसुतगण-
भस्मराशिसंप्लावनं, ततः सागराणां
गमनं चाकथयादित्याह त्रिचत्वारिंशे ४३

अथ ब्रह्मणा गङ्गाया भागीरथीत्यप-
नियोजनं, भगीरथं प्रति पितृभ्यः सलिल-
दाननियोजनम्, भगीरथस्य पितॄन् प्रति
सलिलदानम्, गङ्गावतरणश्रवणमाहात्म्यं
चाहेति प्रत्यपादयच्चतुश्चत्वारिंशे ४४

अथैषां गङ्गोत्तरणपूर्वकं विशालाख्य-
नगरीसमीपगमनसमये तत्रत्यराजवंशं
पृष्टेन विश्वामित्रेण तद्देशीयपूर्ववृत्तान्तमभि-
वक्तुकामेन तदुपयुक्ततया क्षीरोदमथन-
लब्धविष्णुदत्तामृतप्राशनेन सदेवसंवत्से-
न्द्रस्याखिलासुरविध्वंसनपूर्वकं त्रिलोकी-
साम्राज्यं कथितमित्यकथयत्पञ्चचत्वारिंशे ४५

अथ हतपुत्राया दितेरिन्द्रजेतृपुत्रलाभाय
विशालापुरसमीपे सहस्रसंवत्सरं गर्भिण्या-
स्तपश्चरणं, रन्ध्रान्वेषिणेन्द्रेण तस्याः परि-
चरणम्, अप्रायत्यसमये तदुदरं प्रविष्टेन
तेन सप्तधा गर्भच्छेदनम्, पुनस्तस्याः
प्रसादनं च कथितमित्याह षट्चत्वारिंशे ४६

अथ दितेः सप्तानां गर्भच्छेदानां
सप्तवायुस्कन्धरूपेणेन्द्रसकाशाद्वरलाभम्,
अलम्बुसायामिक्ष्वाकुत्पन्नेन विशालाख्येन
राज्ञा विशालानगरनिर्माणं, तद्वंशं च
तदानींतनसुमत्याख्यराजपर्यन्तं रामाय
कथितवन्तं कौशिकं स्वपुरमागतं सुमति-
रपूजयदित्याह सप्तचत्वारिंशे ४७

अथैषां मिथिलोपकण्ठे शून्याश्रमगमन-
समये तद्वृत्तान्तं रामेण पृष्टः कौशिकस्तत्र
पूर्वं गौतमस्य तपश्चरणम्, अहल्याया
इन्द्रेण धर्षणम्, ततो गौतमस्य स्वपत्न्या-
महल्यायाम् अदृश्यतया शापम्, रामाग-
मनसमये तन्मोक्षणम्, इन्द्रे निर्वृषणत्वेन
शापं चोत्सृज्य हिमवत्प्रान्तगमनं चाक-
थयादित्याहाष्टचत्वारिंशे ४८

अथ पितृदेवदत्तमेषवृषणेनेन्द्रस्य वृषण-
लाभं, कौशिकाच्छ्रुतवतो रामस्य सकौ-
शिकस्य गौतमाश्रमे शापविमुक्तयाऽहल्यया
गौतमेन च पूजनम्, मिथिलागमनं चाहे-
कोनपञ्चाशे ४९

... विस्तरेणोपदिष्टमिति न्यदर्शयष्टमे

अथावतरिष्यतो भगवतः सहायार्थं वानरादिसृष्टचै देवान् प्रति ब्रह्मणो नियोजनम्, तथैव देवैर्वानरसृष्टिम्, वानराणां भगवत्साहाय्योपयुक्तशौर्यादिसमृद्धिं चादर्शयत् सप्तदशे १७

अथ भगवतः सपर्यङ्कस्य सहेतिराजस्य श्रीरामादिरूपेणावतारम्, लक्ष्मणादीनां विशेषतः श्रीरामभद्रस्य च कल्याणगुणान्, तेषां जातकर्माद्युपनयनान्तसंस्कारकरणम्, तत्समये विश्वामित्रागमनं चादर्शयदष्टादशे १८

अथ स्वयागरक्षणव्याजेन रामादीन् कन्यारत्नैर्युयोजयिषोर्विश्वामित्रस्य दशरथं प्रति रामलक्ष्मणाभ्यर्थनमदर्शयदेकोनविंशे १९

अथ कौशिकवचनश्रवणाद्रामविश्लेषचिन्तया दशरथविषादमदर्शयद्विंशे २०

अथ रामप्रेषणवृत्तान्तव्याकुलस्य राज्ञो वसिष्ठेन प्रतिबोधनमदर्शयदेकविंशे २१

अथ प्रसन्नहृदयेन राज्ञा विश्वामित्रेण सह रामलक्ष्मणप्रेषणं, विश्वामित्रसकाशाद्रामलक्ष्मणयोर्बलातिबलाख्यविद्याद्वयलाभं चादर्शयद्द्वाविंशे २२

अथैषामङ्गदेशप्राप्तिं विश्वामित्रेण रामं प्रति तत्रत्यपूर्ववृत्तकथनव्याजेन व्यञ्जयत्त्रयोविंशे २३

अथ विश्वामित्रेण रामस्य मलदकरूशदेशयोस्तत्संज्ञालाभकारणम्, ताटकास्वभावं चादर्शयच्चतुर्विंशे २४

अथ रामस्य विश्वामित्रेण ताटकोत्पत्तिविवाहपुत्रलाभागस्त्यशापादिकथनम्, लोकोपद्रवकारिण्यास्तस्या वधे पूर्वाचारनिदर्शनेन दोषाभावकथनं चादर्शयत्पञ्चविंशे २५

अथ ताटकावधपूर्वकं तद्वने तस्यां रात्रौ रामादीनां निवासमदर्शयत्षड्विंशे २६

अथ रामस्य विश्वामित्रसकाशादस्त्रगणलाभमदर्शयत्सप्तविंशे २७

अथास्त्रोपसंहारकप्रतिग्रहमदर्शयदष्टाविंशे २८

अथ रामं प्रति सिद्धाश्रमस्य तत्संज्ञालाभनिमित्तावगमायात्रैवादितिकाश्यपयोर्वामनावतारसिद्धिम्, श्रीवामनस्य बलिनिरासनसिद्धिम्, पुनर्वामनस्यात्र चिरकालसन्निधिरूपां च सिद्धिम्, विश्वामित्रकथितां विश्वामित्रस्य यज्ञदीक्षां चादर्शयदेकोनत्रिंशे २९

अथ रामकृतं सुबाहुमारीचप्रभृतिदुष्टनिग्रहमदर्शयत्त्रिंशे ३०

अथ कृतार्थेन विश्वामित्रेण जनकसुतात्वेनावतीर्णया श्रिया रामं योजयितुं व्याजेन मिथिलाप्रस्थानं प्रस्तुतमित्याहैकत्रिंशे ३१

अथ रामेण शोणकूलदेशवैभवे पृष्टे अयं मद्वंश्यानां देश इति विवक्षन् स्वान्वयं प्रादर्शयद्विश्वामित्र इत्याह द्वात्रिंशे ३२

अथ विश्वामित्रकथितं कुशनाभस्य वायुपीडितकन्यावचनं शृण्वतः क्षमाविशेषं, कन्यानां पात्रविशेषे प्रदानं चादर्शयत्त्रयस्त्रिंशे ३३

अथ विश्वामित्रेण पूर्वप्रसक्ता स्ववंशकथा स्वपर्यन्तकथनेन परिसमापितेत्याह चतुस्त्रिंशे ३४

अथ स्वपादोद्भवगङ्गावैभवं लोके प्रवर्तयितुकामेन रामेण गङ्गायास्त्रिपथगात्वं कथमिति पृष्टो विश्वामित्रो देवैरन्तरिक्षमार्गेण स्वर्गलोकनयनान्मार्गद्वयगमनं तस्याः प्रादर्शयदित्याह पञ्चत्रिंशे ३५

अथ गङ्गाया अन्तरिक्षस्वर्गगमनयोः प्रत्युक्तत्वात्तृतीयपथगमनं, तस्या दिव्यमानुषसंभववैभवं च रामेण पृष्टो विश्वामित्रस्तदुपयोगितया पार्वतीशिवसङ्गमधातुस्खलनकथामाहेत्याह षट्त्रिंशे ३६

अथ प्रतिज्ञातं स्कन्दोत्पादकत्वरूपं गङ्गाया दिव्यसंभववैभवमाहेत्याह सप्तत्रिंशे ३७

अथ गङ्गाया मानुषलोकसंभवं विस्तरेण

कामो विश्वामित्रः सगरस्य पुत्रगण-
प्रकारं, तस्याश्वमेधोपक्रमं चाकथय-
ाहाष्टात्रिंशे ३८

अथ सगरस्याश्वमेधीयाश्वनाशं, तद-
णाय पित्रा नियुक्तैः सागरैर्निरपराध-
जन्तुहिंसनपूर्वकमापातालं भूमेः
नं, तद्वृत्तान्तस्य देवैर्ब्रह्मसकाशे कथनं
त्यदर्शयदेकोनचत्वारिंशे ३९

अथ देवान् प्रति सागराणां कपिलेन
ा भविष्यतीति ब्रह्मणः प्रत्युक्तिं,
राणामारसातलं भूमेः खननप्रकारं,
दिग्गजाष्टकदर्शनपूर्वकं कपिलसकाशे
दर्शनम्, कपिलाभिभवनप्रवृत्तिं, तदैव
कपिलेन भस्मीकरणं चाहेत्यदर्श-
त्वारिंशे ४०

अथ सगरपौत्रेणांशुमता । तन्नियुक्तेन
नयं कपिलसेवनेन, तत्सकाशस्थिता-
यनम्, सगरस्य यज्ञसमाप्तिं, सुपर्णोक्त-
वपुत्रगणोत्तरणौपयिकगङ्गानयना-
यैव तस्य स्वर्गगमनं चाहेत्यकथय-
चत्वारिंशे ४१

अथांशुमद्दिलीपयोर्गङ्गानयनाशक्त्यैव
गमनं, ततो भगीरथस्य गङ्गानयनाय
रणम्, प्रसन्नेन ब्रह्मणा तस्य वरप्रदा-
, रुद्रशिरोवतरणमुखेन गङ्गाया भूम्या-
ानियोजनं चाहेत्यभ्यधात् द्विचत्वारिंशे ४२

अथ पुनर्भगीरथतपःप्रसन्नेन रुद्रेण
सा विष्णुपदीवहनं, बिन्दुसरसि तस्या
र्जनं, गङ्गास्रोतःसु सप्तस्वेकस्य भगी-
थानुगमनं, तस्य च मध्ये जह्नुना तिरो-
नं, पुनर्विसर्जनम्, तेन सगरसुतगण-
भस्मराशिसंप्लावनं, ततः सागराणां
गमनं चाकथयादित्याह त्रिचत्वारिंशे ४३

अथ ब्रह्मणा गङ्गाया भागीरथीव्यप-
नियोजनं, भगीरथं प्रति पितृसलिल-
दाननियोजनम्, भगीरथस्य पितॄन् प्रति
सलिलदानम्, गङ्गावतरणश्रवणमाहात्म्यं
चाहेति प्रत्यपादयच्चतुश्चत्वारिंशे ४४

अथैषां गङ्गातरणपूर्वकं विशालाख्य-
नगरीसमीपगमनसमये तत्रत्यराजवंशं
पृष्टेन विश्वामित्रेण तद्देशीयपूर्ववृत्तान्तमपि
वक्तुकामेन तदुपयुक्ततया क्षीरोदमथन-
लब्धविष्णुदत्तामृतप्राशनेन सदेवसंवस्ये-
न्द्रस्याखिलासुरविध्वंसनपूर्वकं त्रिलोकी-
साम्राज्यं कथितमित्यकथयत्पञ्चचत्वारिंशे ४५

अथ हतपुत्राया दितेरिन्द्रजेतृपुत्रलाभाय
विशालापुरसमीपे सहस्रसंवत्सरं गर्भिण्या-
स्तपश्चरणं, रन्ध्रान्वेषिणेन्द्रेण तस्याः परि-
चरणम्, अप्रायत्यसमये तदुदरं प्रविष्टेन
तेन सप्तधा गर्भच्छेदनम्, पुनस्तस्याः
प्रसादनं च कथितमित्याह षट्चत्वारिंशे ४६

अथ दितेः सप्तानां गर्भच्छेदानां
सप्तवायुस्कन्धरूपेणेन्द्रसकाशाद्वरलाभम्,
अलम्बुसायामिक्ष्वाकूत्पन्नेन विशालाख्येन
राज्ञा विशालानगरनिर्माणं, तद्वंशं च
तदानींतनसुमत्याख्यराजपर्यन्तं रामाय
कथितवन्तं कौशिकं स्वपुरमागतं सुमति-
रपूजयदित्याह सप्तचत्वारिंशे ४७

अथैषां मिथिलोपकण्ठे शून्याश्रमगमन-
समये तद्वृत्तान्तं रामेण पृष्टः कौशिकस्तत्र
पूर्वं गौतमस्य तपश्चरणम्, अहल्याया
इन्द्रेण धर्षणम्, ततो गौतमस्य स्वपत्न्या-
महल्यायाम् अदृश्यतया शापम्, रामाग-
मनसमये तन्मोक्षणम्, इन्द्रे निर्वृषणत्वेन
शापं चोत्सृज्य हिमवत्प्रान्तगमनं चाक-
थयादित्याहाष्टचत्वारिंशे ४८

अथ पितृदेवदत्तमेषवृषणेनेन्द्रस्य वृषण-
लाभं, कौशिकाच्छ्रुतवतो रामस्य सकौ-
शिकस्य गौतमाश्रमे शापविमुक्तयाऽहल्यया
गौतमेन च पूजनम्, मिथिलागमनं चाहै-
कोनपञ्चाशे ४९



७६ विस्तरेणोपदिष्टमिति न्यदर्शयष्टमे

अथ सरामलक्ष्मणस्य कौशिकस्य जनकयज्ञशालाप्रवेशं,जनकेन पूजनं, तस्मै विश्वामित्रेण रामलक्ष्मणयोरहल्याशापमोचनधनुर्जिज्ञासापर्यन्तवृत्तान्तकथनं चाह पञ्चाशे ५०

अथ मातृशापविमोचनश्रवणजातानन्देन शतानन्देन विश्वामित्रमहिमकथां जिगदिषता पुरा राजभावेनावस्थितस्य विश्वामित्रस्य ससैन्यस्य वसिष्ठाश्रमगमनं कथितमिति न्यदर्शयदेकपञ्चाशे ५१

अथ वसिष्ठेन विश्वामित्रस्य ससैन्यस्यातिथ्यकरणप्रयत्नमाहेत्यदर्शयद्द्विपञ्चाशे ५२

अथातिथ्यदृष्टकामधेनुमहिम्नो विश्वामित्रस्य वसिष्ठसकाशे मधुरोपक्रमेण निर्बन्धान्तेन वस्तुविनिमयप्रश्नक्रमेण कामधेनुप्रार्थनं कथितमित्याह त्रिपञ्चाशे ५३

अथ विश्वामित्रेण बलात्कारेण कामधेनुकर्षणं, तत्कुपितया वसिष्ठप्रहितया कामधेन्वा बलसृष्टिं चाकथयच्चतुष्पञ्चाशे ५४

अथ कामधेनुसृष्टबलेन विश्वामित्रसैन्यनाशं, वसिष्ठेन विश्वामित्रसुतशतभस्मीकरणम्,ततो निर्दर्पस्य विश्वामित्रस्य पुनश्चिरकालानुष्ठिततपोविशेषसुप्रसन्नरुद्रदत्तनिखिलास्त्रवर्गस्य वसिष्ठाश्रमनिरोधनं चाहेत्यभ्यधात् पञ्चपञ्चाशे ५५

अथ निखिलास्त्रग्रासदृष्टवसिष्ठब्रह्मतेजोविशेषस्य तादृशब्रह्मतेजःसंपादनेच्छामाहेत्यकथयत्षट्पञ्चाशे ५६

अथ विश्वामित्रस्य तादृशब्राह्मण्यसंपादनाय दक्षिणस्यां दिशि तपश्चरणं तत्समये त्रिशङ्कोः सशरीरं स्वर्गं जिगमिषतो वसिष्ठप्रत्याख्यातस्य तत्पुत्रसकाशे तादृशस्वर्गार्थयजनप्रार्थनं च कथयामासेत्याह सप्तपञ्चाशे ५७

अथ वसिष्ठपुत्रैरपि प्रत्याख्यातस्य त्रिशङ्कोस्तादृशस्वर्गार्थयजनाय विश्वामित्रशरणागतिमाहेत्याहाष्टपञ्चाशे

अथ विश्वामित्रस्य त्रिशंकुयजनार्थं शिष्यान् प्रति नानादेशवास्तव्यब्राह्मणानयननियोजनं, महोदयवासिष्ठोक्तस्वनिन्दावचनश्रवणेन महोदयादिषु शापोत्सर्जनं चाहेत्यदर्शयदेकोनषष्टितमे

अथागतैर्ब्राह्मणैः सह विश्वामित्रस्य त्रिशंकुयजनोपक्रमम्, आवाहिततद्देवानागमकुपितस्य तपोमहिम्ना त्रिशङ्कोः स्वर्गगमनम्, पुनरिन्द्रेण निपात्यमानस्यान्तरिक्षे स्थापनम्, नवीननक्षत्रसप्तर्षिसृष्टिं, तादृशदेवसृष्टिप्रयत्नचकितप्राचीनदेवसंवदत्तवरबलेन स्वसृष्टनक्षत्रवीथ्यामेव त्रिशंकुस्वर्गानुभवनियोजनम्, तद्यज्ञसमाप्तिं चाहेत्यब्रवीत्षष्टितमे

अथ विश्वामित्रस्य पश्चिमायां दिशि तपश्चरणं, तत्समये अम्बरीषस्य यज्ञीयपशुविनाशप्रायश्चित्तार्थं नरपशुतया शुनःशेपं गृहीत्वा गमनं चाहेत्यवोचदेकषष्टितमे

अथ विश्वामित्रस्य शुनःशेपादेशतया स्वपुत्रनियोजनम्, तदनङ्गीकुर्वाणेषु तेषु शापदानम्, उपायान्तरेण शुनःशेपरक्षणं चाहेत्यकथयद्द्विषष्टितमे

अथ विश्वामित्रस्य पुष्करेषु तपस्यतो मेनकासङ्गसंभवं विघ्नम्, ततोऽस्य पुनः प्रबुद्धस्य तीव्रतपसा ब्रह्मणः सकाशात् महर्षित्ववरलाभं,पुनरस्मिन् ब्रह्मर्षित्वं प्रति प्रयस्यति सति देवैस्तद्विघटनाय रम्भानियोजनं चाहेत्युदैरयत् त्रिषष्टितमे

अथ विश्वामित्रस्य रम्भां शप्त्वा पश्चात्तापमुपगतस्य दृढनिश्चयपूर्वकं सहस्रसंवत्सरतपश्चरणदीक्षामभ्यधादित्यवदच्चतुःषष्टितमे

अथ विश्वामित्रस्य ब्रह्मर्षित्वप्राप्तिमुवाचेत्याह पञ्चषष्टितमे ६५

अथ विश्वामित्रेण धनुर्दर्शनाय राघवागमनं प्रतिवेदितो जनको धनुर्महिमकथनपूर्वकं धनुर्वरं पूरयिष्यते राघवाय सीताप्रदानं प्रत्यज्ञासीदित्यकथयत्षट्षष्टितमे ६६

अथ राघवेण धनुर्भञ्जनं, जनकेन स्वचिकीर्षितसीताप्रदानवृत्तान्तज्ञापनेन दशरथानयनायायोध्यां प्रति दूतप्रेषणं चाह सप्तषष्टितमे ६७

अथ दशरथस्य दूतमुखेन श्रुतजनकाभिप्रायस्य वसिष्ठादिभिरालोच्य मिथिलागमननिश्चयमाहाष्टषष्टितमे ६८

अथ दशरथस्य मिथिलागमनं, जनकेन समागमं चाहैकोनसप्ततितमे ६९

अथ जनकेन संबन्धार्हत्वाय वसिष्ठेन इक्ष्वाकुसंतानकीर्तनं कथयामास सप्ततितमे ७०

अथ वसिष्ठेन वरवंशकीर्तनपूर्वकं वधूवरणे कृते, जनकः स्ववंशाविशुद्धताज्ञापनपूर्वकं कन्यादानं प्रत्यज्ञासीदित्यभ्यधादेकसप्ततितमे ७१

अथ विश्वामित्रेण भरतशत्रुघ्नार्थे कुशध्वजसुताद्वयवरणं, रामादीनां गोदानमङ्गलकरणं चाह द्विसप्ततितमे ७२

अथ सीताविवाहमाह त्रिसप्ततितमे ७३

अथायोध्यां प्रति प्रस्थाने मध्येमार्गं जामदग्न्यागमनं चतुःसप्ततितमे ७४

अथ भार्गवेण रामभग्नधनुःप्रसङ्गवशात् पीताम्बरकृत्तिवाससोर्मिथो विरोधेन युद्धारम्भे भगवता सधनुर्हस्तरुद्रस्तम्भनेन देवानां सर्षिगणानां पुरुषोत्तमे सर्वाधिकत्वनिश्चयकथनपूर्वकं तादृशभगवत्परिगृहीतस्वधनुःपूरणाभ्यर्थनमकथयत्पञ्चसप्ततितमे ७५

अथ जामदग्न्यगर्वनिर्वापणमभ्यधात्षट्सप्ततितमे ७६

अथ स्वपुरं प्राप्य सीतया रामः सुखमुवासेत्याह सप्तसप्ततितमे ७७


एवं बालकाण्डसर्गाणां प्रधानकथानुक्रमणिका प्रदर्शिता।

## ॥ अथायोध्याकाण्डानुक्रमणिका ॥


तत्र दशरथेन चिकीर्ष्यमाणाभिषेको पयुक्ततया रामस्य राज्यार्हतौपयिककल्याणगुणपूर्तिः प्रादर्शि प्रथमे १

अथ रामाभिषेकस्य सर्वसंमतत्वमकथि द्वितीये २

अथ निश्चितरामाभिषेकस्य दशरथस्य संभारसंभरणप्रवृत्तिपूर्वकं श्रीरामे चिकीर्षिताभिषेककथनं न्यगादि तृतीये ३

अथ पुनर्दशरथेन राममाहूय कालविशेषादिनिर्णयपूर्वकं स्वस्य दुःस्वप्नदर्शनेन शीघ्रमभिषेककर्तव्यतोपदिष्टेत्यभ्यधीयत चतुर्थे ४

अथ दशरथप्रेषितस्य वसिष्ठस्याभिषेकाङ्क्षतया राममुपवासयितुं राममन्दिरं प्रति गमनं, रामायोपवासमुपदिश्य पुना राजसमीपागमनं चाभाषि पञ्चमे ५

अथ रामस्य वसिष्ठोपदिष्टक्रमेणोपवासकरणम्, गृहालंकरणम्, पौरैः पुरालंकरणपूर्वकं रामाभिषेकप्रतीक्षणं चादर्शि षष्ठे ६

अथ मन्थराया धात्रीमुखादवगतरामाभिषेकसन्नाहायाः कैकेय्यै रामाभिषेकस्यानर्थरूपतया कथनं,रामाभिषेकश्रवणतुष्टया कैकेय्या तस्यै पारितोषिकप्रदानपूर्वकं श्लाघनं चाभ्यधायि सप्तमे ७

अथ पुनर्मन्थरया पारितोषिकोत्सर्जनपूर्वकं रामाभिषेकस्य कैकेय्यनर्थरूपत्वं विस्तरेणोपदिष्टमिति न्यदर्श्यष्टमे ८

अथ मन्थरायाः स्ववचनं हिततया गृहीतवत्यै कैकेय्यै दशरथदत्तपुरातनवरद्वयोपदेशतद्ग्रहणप्रकारनिदर्शनम्, ततः कैकेय्याः मन्थराप्रशंसनपूर्वकं क्रोधागारप्रवेशनं चादर्शि नवमे ९

अथ राज्ञः कैकेयीदर्शनतदनुनयौ न्यदर्शिषातां दशमे १०

अथ मन्थरोपदिष्टक्रमेण कैकेय्या दशरथं प्रति वरद्वयाभ्यर्थनं प्रत्यपाद्येकादशे ११

अथ दशरथस्य रामाभिषेकविघ्नश्रवणमूर्च्छितस्य पुनः प्रबुद्धस्य शोकक्रोधभयजुगुप्सादिशबलानि कैकेयीं प्रति वचनानि प्रादर्शिषत द्वादशे १२

अथ पश्चात्तप्तस्य धर्मपाशबद्धस्य दशरथस्य पुनः कैकेयीसान्त्वनं प्रादर्शि त्रयोदशे १३

अथ दशरथस्य धर्मभयेन रामविवासननिर्धारणं, ततः सूर्योदये बहिरागतवसिष्ठचोदितेन सुमन्त्रेण प्रबोधनम्, राज्ञस्तदनाभिमुख्यम्, तदा कैकेय्या रामानयनाय सुमन्त्रप्रेषणं, सुमन्त्रस्य बहिर्निर्गतस्य जनसंघदर्शनं चादर्शि चतुर्दशे १४

अथ पुनः सुमन्त्रस्य रामाभिषेकसामग्रीसहितपौरप्रधानप्रेषितस्य राज्ञः प्रबोधनम्, राज्ञा कैकेय्युक्तरीत्या रामानयनाय प्रेषणम्, ततः सुमन्त्रस्य राममन्दिरगमनं च प्रत्यपादि पञ्चदशे १५

अथ सुमन्त्रमुखेन विदितराजनियोगस्य रामस्य राजान्तःपुरं प्रति प्रस्थानं न्यगादि षोडशे १६

अथ रामस्य राजान्तःपुरप्रवेशोऽभाषि सप्तदशे १७

अथ राज्ञः स्वानभिभाषणादर्शनादिजनितसंतापं रामं प्रति कैकेय्या वनवासनियोजनमदर्श्यष्टादशे १८

अथाङ्गीकृतकैकेय्युक्तवनवासवचनस्य सलक्ष्मणस्य रामस्य मातृसमीपगमनमभ्यधाय्येकोनविंशे १९

अथ राममुखाच्छ्रुतवनवासवृत्तान्तायाः कौसल्याया मूर्च्छाविलापादिरदर्शि विंशे २०

अथ लक्ष्मणोक्तरामवनवासानङ्गीकारवचनश्रवणलब्धनिश्चितधैर्यया कौसल्यया प्रार्थितस्य रामस्य कौसल्यासान्त्वनलक्ष्मणसमाधानप्रतिपादनमेकविंशे २१

अथ रामेण लक्ष्मणस्य दैवबलप्रदर्शनेन कैकेयीविषयकरोपोपशमनोपपादनं द्वाविंशे २२

अथ लक्ष्मणेन पुनर्दैवस्य निरसनीयतां पौरुषस्यैवावलम्बनीयतां चावलम्ब्य विस्तरेणोपन्यस्तस्य पूर्वपक्षस्य रामेण धर्ममार्गमवलम्ब्य संग्रहेण सिद्धान्तप्रदर्शनं त्रयोविंशे २३

अथ रामस्य धर्ममार्गे दृढाध्यवसायं समीक्ष्य कौसल्यया कथंचिद्वनवासाभ्यनुज्ञानप्रतिपादनं चतुर्विंशे २४

अथ कौसल्यया विस्तरेण कृतमङ्गलाशासनस्य रामस्य कौसल्याभ्यनुज्ञापूर्वकं स्वगृहं प्रति प्रस्थानकथनं पञ्चविंशे २५

अथ स्वगृहं गतस्य रामस्य सीतायै स्ववृत्तान्तकथनं, ततः शोचन्त्याः सीताया गृहे स्थापनाय समुदाचारशिक्षणे चावाभाषिष्ट षड्विंशे २६

अथ रामं प्रति सीतया विस्तरेण स्ववननयनप्रार्थनं, तस्या रामेण संग्रहेण समाधानं चावादीत्सप्तविंशे २७

अथ रामेण पुनः सीतायै विस्तरेण वनदोषप्रदर्शनमब्रवीदष्टाविंशे २८

अथ वनस्य दोषान् बलवदाश्रयेण गुणत्वेनोपपादयन्त्या सीतया पुनः स्ववन-

गमनाभ्यर्थनं, रामेण सान्त्वनं चाकथयदेकोनत्रिंशे २९

अथ पुनः सीतायाः प्रणयरोषेण परिक्षेपपूर्वकं भाविविश्लेषासहनेन महति शोकेऽनुभूयमाने ततः कथंचिद्रामेण तद्वननयनमङ्गीकृत्येष्टजनेभ्योऽर्थदानाभ्यनुज्ञानमुपापीपदत्रिंशे ३०

अथ लक्ष्मणस्य स्ववनगमनाभ्यर्थनं, रामेणानङ्गीकरणं, पुनः सनिर्बन्धप्रार्थनेन तस्यापि वननयनाङ्गीकरणं, वसिष्ठसद्मनिक्षिप्तायुधजातानयनाय प्रेषणम्, पुनरागतस्य तस्य यात्रादानाय सुयज्ञादिब्राह्मणानयननियोजनमित्येतदभ्यधादेकत्रिंशे ३१

अथ रामाज्ञया लक्ष्मणकृतं वसिष्ठपुत्राय सुयज्ञायाङ्गदादिभूषणदानं, पर्यङ्कदानम्, मातुलदत्तशत्रुञ्जयाख्यकुञ्जरदानम्, अगस्त्यकौशिककौसल्योपाध्यायादिभ्यो नानारत्नसुवर्णरजतगवादिदानम् चित्ररथाख्याय सूताय रत्नवस्त्रगवादिविश्राणनम्, कठकालापेभ्यो माणवकेभ्यो रत्नपूर्णाशीत्युष्ट्रशालिवाहसहस्रद्विशतमहावृषभगोसहस्रवितरणम्, कौसल्यानुवर्तनपरबटुसंघेभ्यः प्रत्येकं गोसहस्रदानम्, गृहरक्षिणामनुचराणां बहुधनप्रदानपूर्वकं गृहरक्षणनियोजनम्, ततो महतो धनराशेर्बालवृद्धद्विजातिजनेभ्यो भूरिदानम्, त्रिजटाय सकुटुम्बमागताय तत्क्षिप्तदण्डपातपर्यन्तगोवृन्ददानं, तत्प्रसादनम्, तस्याशीर्वचनं चेत्येतदुपपादयामास द्वात्रिंशे ३२

अथ रामस्य सीतालक्ष्मणानुगमनविज्ञापनाय पितरं द्रष्टुं लक्ष्मणसीतामात्रानुगतस्य वीथ्यां पादचारेण गमनसमये पौराणां तादृशरामदशादर्शनविघूर्णितमानसानां रामादीनुद्दिश्य बहुविधशोकवचनम्, ततः पितृसमीपं गतस्य तस्य सुमन्त्रमुखेन राज्ञे स्वागमनविज्ञापनं च प्रत्यपादयत्त्रयस्त्रिंशे ३३

अथ सुमन्त्रविज्ञापितरामागमनस्य चिरकालदुर्लभरामदर्शनायानीताखिलेष्टदारादिजनस्य राज्ञो रामेण वन्दनपूर्वकं वनगमनानुज्ञामर्थितस्य कथंचिदनुज्ञादानं, शोकेन मूर्च्छनमित्यादि कथयामास चतुस्त्रिंशे ३४

अथ कैकेयीपारुष्यदर्शनकुपितेन सुमन्त्रेण तन्मातृवृत्तान्तादिकथनपूर्वकं भर्त्सनसान्त्वने, तावताऽपि कैकेय्या अक्षोभं चाभ्यवदत्पञ्चत्रिंशे ३५

अथ राज्ञा रामानुगमनाय सेनापरिजनधनधान्यकोशादिनियोजनं, तदसहमानया कैकेय्या रामस्यासमञ्जवत् प्रेषणवचनम्, तदसहमानेन सिद्धार्थनाम्ना मन्त्रिप्रधानेनासमञ्जदोषरामनिर्दोषताप्रदर्शनपूर्वकं कैकेयीविनिन्दनमित्येतत् प्रत्यपादयत् षट्त्रिंशे ३६

अथ रामेण परिजनादिनिवारणपूर्वकं चीरखनित्राद्यर्थनं, ततो रामलक्ष्मणयोः कैकेयीदत्तचीरधारणं, स्वयं चीरधारणासमर्थायाः सीतायाः रामेण तद्बन्धनसमये वसिष्ठेन तत्प्रतिषेधपूर्वकं कैकेयीविनिन्दनं, सीताया रामतुल्यशीलाभिकाङ्क्षया चीराविसर्जनमित्येतत्सप्तत्रिंशे ३७

अथ सीतायाश्चीरधारणपर्यन्तदुर्दशादर्शनक्षुभितहृदयैर्जनैर्धिक्कारेण दशरथस्य कैकेयीं प्रति नानाविधकृपणवचनपूर्वकं भुवि पतनं, तदवस्थं तं प्रति रामस्य कौसल्यारक्षणप्रार्थनामित्येतदकथयदष्टात्रिंशे ३८

अथ सुदुःखितराजाज्ञया रामस्य वनगमनाय सुमन्त्रेण रथानयनम्, राजाज्ञप्तकोशाध्यक्षानीतदिव्यभूषणाम्बरालंकृतां वनवासं प्रति प्रस्थितां सीतां प्रति कौसल्यया पातिव्रत्यधर्मशिक्षणम्, सीतया तदनुमोदनम्, रामस्य कौसल्यादिमातृजनानुज्ञापनमित्येतदब्रवीदेकोनचत्वारिंशे ३९

अथ राजानं प्रदक्षिणीकृत्य सुमित्रानुज्ञातेन लक्ष्मणेन सीतया च सह सुमन्त्रानीतं रथमारुह्य वनं प्रस्थितं रामं पौरेष्वनुगच्छत्सु यावच्छक्त्यनुगमनेन विषण्णयोः कौसल्यादशरथयोर्मन्त्रिवचनेन गमननिवृत्तिमुदैरयच्चत्वारिंशे ४०

अथ रामस्य वनगमनेनान्तःपुरस्थराजस्त्रीजनविलापम्, अयोध्यानगरसंक्षोभं च समुपापादयदेकचत्वारिंशे ४१

अथ रामादर्शनेन भुवि परिलुठतो मूर्च्छितस्य पुनर्लब्धसंज्ञस्य कौसल्यादिदत्तहस्तावलम्बनस्यान्तःपुरं तत्र च कौसल्यागृहं प्रविष्टस्य राज्ञः शोकातिरेकं जगाद द्विचत्वारिंशे ४२

अथ राज्ञः समीपवर्तिन्याः कौसल्यायाः पुत्रशोकातिशयं, पुना रामागमनमनोरथं, पुनः शोचनं चोवाच त्रिचत्वारिंशे ४३

अथ सुमित्रया कौसल्याश्वासनं जगाद चतुश्चत्वारिंशे ४४

अथ बहुशो निवर्तनप्रयत्नेऽप्यनिवर्तमानैः पौरैः सह रामस्य तमसातीरे तद्रात्रौ निवासमकथयत् पञ्चचत्वारिंशे ४५

अथ जलमात्रकृताहारेण लक्ष्मणं प्रति पितृमातृवृत्तान्तकथनयापितत्रियामायामत्रयेण रामेण लक्ष्मणसुमन्त्राभ्यामालोच्य पौरान् वञ्चनेन विसृज्य गमनं प्रत्यपादयत् षट्चत्वारिंशे ४६

अथ सूर्योदयानन्तरं रामेण वञ्चितानां पौराणां शोकेनायोध्यागमनमदर्शयत्सप्तचत्वारिंशे ४७

अथ रामेण शून्यामयोध्यां निरीक्ष्य पौराणां शोचनं विस्तरेणोपापीपददष्टचत्वारिंशे ४८

अथ रामस्य नानाग्रामक्षेत्रनदीदर्शनपूर्वकं पुनरागमनादिमनोरथपूर्वकं च कोसलदेशातिक्रमणमभ्यधादेकोनपञ्चाशे ४९

अथ दर्शनीयतमं स्वविवासनासहनसमुदीरितनानाविलापवचनजनभरितं कोसलदेशमतिक्रान्तस्य रामस्यातिरमणीयपुण्यतमभागीरथीतीरगमनं, गुहेन समागमं, तत्रेङ्गुदीमूले सीतया सह भूमौ शयनम्, लक्ष्मणगुहाभ्यामभितो रक्षणं चाचचक्षे पञ्चाशे ५०

अथातिसुकुमारदिव्यदेहयोः सीतारामयोरतिकठिनस्थण्डिलशयनमन्वीक्ष्य पितृमातृप्रभृतींश्चोद्दिश्य गुहसमक्षं लक्ष्मणस्याप्रभातमनुशोचनमुदैरयदेकपञ्चाशे ५१

अथ पुनः प्रातः श्रीरामप्रबोधितलक्ष्मणाज्ञप्तगुहनावारोहणसमये रामस्य मातापितरावुद्दिश्य विस्तरेण संदेशवचनं, सुमन्त्रस्य स्वविश्लेषासहनेनानुशोचतः समाश्वासनम्, गुहानीतन्यग्रोधक्षीरेण जटाकरणं, गुहाभ्यनुज्ञानं, नावा गङ्गातरणम्, अतिदूरमार्गगमनेन खिन्नानां सीतारामलक्ष्मणानां कथंचिद्वत्सदेशानतिक्रम्य सायंकाले मृगादिमांसेन कृताहाराणां कुत्रचिद्वनस्पतिमूले रात्रौ वासाय गमनमित्येतदभाणीद्द्विपञ्चाशे ५२

अथ रामस्य लक्ष्मणाभिप्रायजिज्ञासया स्वविवासनमुद्दिश्य नानाविधानुशोचनम्, लक्ष्मणं प्रत्ययोध्यागमननियोजनं, पुनस्तदभिप्रायज्ञेन लक्ष्मणेन रामसमाश्वासनपूर्वकं सीतायाः स्वस्य च क्षणमपि रामविश्लेषे सत्ताविनाशकथनेन दुस्त्यजत्वोपपादनम्, अथ तादृशमहारण्यमध्ये पर्णशय्यायां निर्भयानां त्रयाणां शयनमित्येतदवोचत्त्रिपञ्चाशे ५३

अथ रामादीनां पुनः सूर्योदयानन्तरं गङ्गायमुनासङ्गमे प्रयागे भरद्वाजाश्रमगमनं, भरद्वाजेन तेषामर्घ्यादिभिरभिपूजनं, रामेणैकान्तवासयोग्यक्षेत्रे भरद्वाजेन चित्रकूटाख्य-

गिरेस्ताद्दशस्थलत्वेन कथनम्, पुनः प्रभाते भरद्वाजेन चित्रकूटरामणीयककथनमित्येतदभिललाप चतुष्पञ्चाशे ५४

अथ प्रस्थितान् रामादीन् प्रति भरद्वाजेन मङ्गलाशासनपूर्वकं चित्रकूटमार्गं कथयित्वा निवर्तनं, ततस्तेषां चित्रकूटं प्रति प्रस्थितानां प्लवेन कालिन्दीमुत्तीर्य वनरामणीयकदर्शनपूर्वकं सायंकाले मृगमांसेन कृताहाराणां यमुनावने निवसनमित्येतदुदर्शयत्पञ्चपञ्चाशे ५५

अथ पुनः सूर्योदयानन्तरं गमनसमये सीतां प्रति वनशोभादर्शनकुतूहलातिकान्तमार्गेण रामेण सलक्ष्मणेन चित्रकूटप्रान्ते वाल्मीक्याश्रमे वाल्मीकिसेवनम्, लक्ष्मणेन रामनियुक्तेन पर्णशालाकरणम्, गृहप्रवेशाङ्गवास्तुबल्यर्थं समित्पुष्पमांसादिसंपादनम्, अथ रामेण वास्तुशान्तिं कृत्वा सीतालक्ष्मणाभ्यां सह तत्र सुखेन चिरं निवसनमित्येतदभाषत षट्पञ्चाशे ५६

अथ गुहप्रेषितचारमुखेन रामस्य चित्रकूटगमनपर्यन्तं वृत्तान्तं विज्ञाय सुमन्त्रस्यायोध्यागमनम्, रामं विनाऽऽगतं सुमन्त्रमुद्वीक्ष्यायोध्याजनानामनुशोचनम्, कौसल्यानिवेदितसुमन्त्रागमनवृत्तान्तस्य दशरथस्य शोकातिशयेन मूर्च्छनमित्येतदकथयत्सप्तपञ्चाशे ५७

अथाश्वस्तं दशरथं प्रति रामोक्तसमाश्वासनरूपसंदेशकथनम्, लक्ष्मणोक्तरामविवासनमूलकक्रोधोक्तिकथनं, किमप्यन्तर्निगूह्य वक्तुमशक्नुया वैदेह्या सबाष्पनेत्रया स्थितमिति सीतास्थितिकथनमित्येतदभणदष्टपञ्चाशे ५८

अथ सुमन्त्रेण राज्ञे रामविवासनायुक्तत्वसूचनाय रामविश्लेषेणायोध्यकनिखिलचराचरजन्तुपरिम्लानताकथनम्, तच्छ्रवणेन दशरथस्य पश्चात्तापेन मूर्च्छनमित्येतददर्शयदेकोनषष्टितमे ५९

अथ सुमन्त्रमुखश्रुतरामवृत्तान्तायाः कौसल्यायाः शोकातिरेकः, सुमन्त्रेण तस्याः समाश्वासनमित्येतत् प्राबन्ध षष्टितमे ६०

अथ पुरा राजानं प्रति कौसल्यायाः पुत्रविवासनप्रयुक्तो विलापः, तच्छ्रवणेन राज्ञो मूर्च्छनं चेत्येतत् प्राचीकशदेकषष्टितमे ६१

अथ लब्धसंज्ञेन राज्ञा कौसल्यासान्त्वनम्, ततः कौसल्यायाः स्वोक्तवाक्यकटुत्वनिमित्तं राजक्षमापणम्, ततो रात्र्यां शोकेन राज्ञो निद्रापारवश्यमित्यन्तं न्यदर्शयद्द्विषष्टितमे ६२

अथ मुहूर्तात् प्रबुद्धेन राज्ञा कौसल्यां प्रति पूर्वं कदाचिद्रात्रौ सरय्वां जलमाददानः कश्चिदृषिपुत्रो मया मृगयां पर्यटता गजभ्रान्त्या हत इत्यादिवृत्तान्तः कथित इति न्यदर्शयत्रिषष्टितमे ६३

अथ ऋषिशापात् पुत्रशोकेन स्वस्य मरणं सिद्धमिति कथयता राममेवानुशोचता दशरथेनार्धरात्रे मरणमित्येतत्प्रतिपादयामास चतुःषष्टितमे ६४

अथ परेद्युः प्रातरागतसूतमागधादिप्रबोधनेनाप्रबुद्धे राज्ञि परीक्षया राजमरणं निश्चित्य रुदन्तीभिरितराभिरन्तःपुरस्त्रीभिः सह प्रबुद्धयोः कौसल्यासुमित्रयोर्मृतं राजानमुद्दिश्य रोदनं कथयामास पञ्चषष्टितमे ६५

अथ विस्तरेण कौसल्यायाः कैकेयीविनिन्दन—रामगुणस्तवन—तिलतण्डुलितः प्रलापः, पश्चादमात्यैः पुत्रमानीय राजसंस्कारं चिकीर्षद्भिस्तैलद्रोण्यां राज्ञः प्रक्षेपः, राजस्त्रीणां कैकेयीपरिक्षेपपूर्वको बाहुभिरुरोविक्षेपः, अयोध्यासंक्षोभश्चेतीमेऽर्थाः प्रत्यपादिषत षट्षष्टितमे ६६

अथापरेद्युः प्रातः सभायां मार्कण्डेयमौद्गल्यवामदेवादीनां राजर्त्विजां वसिष्ठ-

सकाशे अराजकताप्रयुक्तदोषविस्तरवर्णनपूर्वकं भरतानयनप्रार्थनं प्राकाशि सप्तषष्टितमे ६७

अथ वसिष्ठप्रहितानां दूतानां भरतानयनाय केकयनगरगमनमभ्यधाय्यष्टषष्टितमे ६८

अथ केकयनगरे भरतेन तस्यामेव रात्रौ दृष्टस्य दुःस्वप्नस्य प्रातः सुहृद्भ्यः कथनमुपापाद्येकोनसप्ततितमे ६९

अथ तदैव दूतैः प्रचोदितस्य मातामहमातुलदत्तनानाविधपरिजनपरिच्छदसेनादिकस्य भरतस्यायोध्यां प्रति प्रस्थानमाचख्यौ सप्ततितमे ७०

अथ भरतस्य मार्गे नानानदीनगरग्रामवनमहीधराद्यतिक्रमणपूर्वकमविरतसप्तरात्रगमनेनायोध्यां प्रविशतो नगरविषाददर्शनपरिक्षुभितमनसः पितृभवनगमनमभाष्येकसप्ततितमे ७१

अथ कृतवन्दनाय पितृवृत्तान्तं पृच्छते भरताय कैकेय्या पितृमरणकथनं, ततः शोचन्तमग्रजं पृच्छन्तं प्रति स्वकृतरामविवासनकथनपूर्वकं राज्याङ्गीकरणनियोजनमित्येतदभ्यलापि द्विसप्ततितमे ७२

अथ पितृमरणाग्रजप्रवासनश्रवणविलुप्तधैर्येण प्रवृद्धशोकेन च भरतेन मृदुतया कैकेयीविनिन्दनमुक्तवान् त्रिसप्ततितमे ७३

अथ प्रवृद्धरोषेण क्रूरतया कैकेयीविनिन्दनं, कर्षणक्लिश्यमानकवृषभदर्शनविषण्णसुरभिनिदर्शनेन कौसल्याशोकमहत्ताकथनपूर्वकं शोकेन मूर्च्छनमितीदं भाषितवांश्चतुःसप्ततितमे ७४

अथ भरतशत्रुघ्नयोः कौसल्यासमागमं, तस्याः प्रत्यायनाय भरतेन विस्तरेण शपथकरणम्, ततस्तस्याः प्रत्ययपूर्वकं भरतशत्रुघ्नाभ्यां सह शोकेनैव रात्र्यतिवाहनं च प्रतिपादितवान् पञ्चसप्ततितमे ७५

अथ परेद्युर्वसिष्ठचोदितेन भरतेन दशरथसंस्कारकरणमुपपादितवान् षट्सप्ततितमे ७६

अथ भरतेन द्वादशेऽहनि सापिण्डीकरणान्तश्राद्धकरणं त्रयोदशेऽहनि पितरमुद्दिश्य भरतशत्रुघ्नयोर्बहुशोचनं, वसिष्ठसुमन्त्रादिभिस्तयोः समाश्वासनं, तद्देशाचारभूतदहनदेशसेचनादिनियोजनं चाभिहितवान् सप्तसप्ततितमे ७७

अथ शत्रुघ्नेन मन्थराशिक्षणं, कैकेय्या मन्थराश्वासनं च प्रकाशितवान् अष्टसप्ततितमे ७८

अथामात्यादिभिर्भरतं प्रति राज्याङ्गीकरणप्रार्थनम्, भरतेन तदनभ्युपगम्य स्वस्य रामनिवर्तनोद्योगकथनपूर्वकं मार्गशोधनाय तदौपयिकजनप्रेषणनियोजनं च बोधितवान् एकोनाशीतितमे ७९

अथायोध्यामारभ्य आजाह्नवीतीरं मार्गसमीकरणं जल्पितवानशीतितमे ८०

अथापरेद्युः प्रभाते राजप्रबोधनार्थमङ्गलवाद्यघोषश्रवणसंधुक्षितपितृमरणाग्रजविवासनस्मरणस्य भरतस्य शोकातिशयम्, प्रातः सभामागतेन वसिष्ठेन सुमन्त्रद्वारा भरतशत्रुघ्नामात्यप्रधानाद्यशेषराजवल्लभाह्वानम्, तेषां सभाप्रवेशं चाख्यातवानेकाशीतितमे ८१

अथ सभायां वसिष्ठेन राज्याङ्गीकरणमर्थितेन तावदसहनकृततन्निन्दनेन तीव्रतमस्वीयरामनिवर्तनाभिलापकथनानन्दितनिखिलजनेन तेन भरतेन वसिष्ठादिभिः कौसल्यादिभिरमात्यादिभिरखिलपौरवर्गैश्च सह रामसमीपगमनं प्रति प्रस्थानं कथितवान् द्व्यशीतितमे ८२

अथ तीव्रतमरामदर्शनोत्कण्ठमातृजनप्रमुखपरिवृतस्य भरतस्य ससैन्यस्य प्रस्थितस्य गङ्गातीरेऽवस्थानं प्रकाशितवान् त्र्यशीतितमे ८३

अथ तत्र भरतं प्रति गुहेनातिथ्याभ्यर्थनं दाशतवांश्चतुरशीतितमे ८४

अथ भरतागमननिमित्तं भरतमुखेन ज्ञातवता गुहेनाग्रजमनुशोचतो भरतस्य समाश्वासनमुदितवान् पञ्चाशीतितमे ८५

अथ तत्र रामावस्थानसमये रात्रौ लक्ष्मणस्य सीतारामयोर्भूमिशयनादिकं प्रत्याप्रभातं शोचनम्, सूर्योदयानन्तरं रामलक्ष्मणयोर्जटाकरणपूर्वकं भागीरथीमुत्तीर्य वने गमनं च गुहेन भरतायोक्तमित्याह षडशीतितमे ८६

अथ तच्छ्रवणजनितशोकातिशयं भरतं प्रति गुहेन तत्र पूर्वं रामस्य जलमात्रकृताहारस्य सीतया सह दर्भास्तीर्णे इङ्गुदीवृक्षमूले शयनं, तदानीं स्वस्य ज्ञातिजनपरिवृतस्य लक्ष्मणेन सह जागरणपूर्वकं रक्षणं च कथितमित्याह सप्ताशीतितमे ८७

अथ दर्भास्तीर्णे तत्र तत्र विकीर्णसीताभरणगलितकनकबिन्दुकं सीतापरिवर्तनदशासक्ततत्कौशेयतन्तुकमिङ्गुदीमूलमुद्वीक्ष्य भरतस्यानुशोचनमाहाष्टाशीतितमे ८८

अथ ससैन्यस्य भरतस्य गङ्गातरणं भरद्वाजाश्रमप्रवेशं चाह एकोननवतितमे ८९

अथ भरतस्य भरद्वाजदर्शनमन्योन्यकुशलप्रश्नादिकं चाह नवतितमे ९०

अथ भरतस्य ससैन्यस्य भरद्वाजेन कृतमातिथ्यमाहैकनवतितमे ९१

अथ भरतस्य चित्रकूटं प्रति प्रस्थानसमये भरद्वाजं प्रति कौसल्यादिव्यक्तिनिर्देशनम्, ततो भरद्वाजमनुज्ञाप्य चित्रकूटं प्रति प्रयाणम्, मध्ये यमुनातीरवनप्रवेशं चाह द्विनवतितमे ९२

अथ भरतस्य चित्रकूटप्रान्तवनप्रवेशम्, वसिष्ठं प्रति भरद्वाजोक्तस्थलचिह्नप्रत्यभिज्ञापनम्, शत्रुघ्नं प्रति वनवर्णनपूर्वकं रामाश्रमान्वेषणचोदनम्, ततः शत्रुघ्नप्रेषितैः पुरुषै रामाश्रमधूमचिह्नप्रदर्शनं, भरताय तत्कथनं, ततो भरतेन तत्रैव सेनास्थापनं चाह त्रिनवतितमे ९३

अथ रामस्य चित्रकूटप्रवेशप्रभृतितद्दिनपर्यन्तवृत्तान्तस्य प्रतिदिनमेकरूपतया तदहर्वृत्तान्तकथनेन यावद्दिनवृत्तान्तोऽपि कथितः स्यादिति कृत्वा तस्मिन्नहनि रामेण प्रातरनुष्ठानानन्तरं सीतां प्रति चित्रकूटरामणीयकप्रदर्शनपूर्वकमनुकूलपत्नीभ्रातृलाभेन तादृशरमणीयस्थललाभेन चायोध्यातोऽधिकं निर्वृतिः कथितेत्याह चतुर्नवतितमे ९४

अथ रामेण सीतायाः मन्दाकिन्याख्यनदीरामणीयकप्रदर्शनेनोपलालनमाह पञ्चनवतितमे ९५

अथ तत्र रामस्य सीतया सार्कं मांसभ्यवहारसमये वन्यमृगयूथसंक्षोभदर्शनेन तत्कारणपरिज्ञानाय लक्ष्मणप्रेरणम्, तत उन्नतं सालमारुह्य कोविदारध्वजदर्शनेन ससैन्यतया रामस्य हननायागतं भरतं मन्वानेन लक्ष्मणेन रामप्रेम्णा भरतजिघांसापर्यन्तमातिशङ्कनं चाह षण्णवतितमे ९६

अथ रामेण कुपितस्य लक्ष्मणस्य परिसान्त्वनमाह सप्तनवतितमे ९७

अथ भरतस्य शत्रुघ्नगुहतज्ज्ञातिसहितस्य पादचारेण रामाश्रमान्वेषणं, तच्चिह्नधूमदर्शनानन्तरं पुनस्तत्रागतजनस्थापनपूर्वकं गुहं शत्रुघ्नं चादायगमनमाहाष्टनवतितमे ९८

अथ भरतस्य मातृजनानयनाय वसिष्ठं संदिश्याग्रे गच्छतः शत्रुघ्नं प्रति रामाश्रमचिह्नानि निर्दिशतो रामदुर्दशामनुशोचतः शत्रुघ्नसुमन्त्रसहितस्य रामसमागममाहैकोनशततमे ९९

अथ रामेण कुशलप्रश्नव्याजेन भरतस्य भाविराज्यरक्षणौपयिकतया राजनीतिशिक्षणमाह शततमे १००

सकाशे अराजकताप्रयुक्तदोषविस्तरवर्णनपूर्वकं भरतानयनप्रार्थनं प्राकाशि सप्तषष्टितमे ६७

अथ वसिष्ठप्रहितानां दूतानां भरतानयनाय केकयनगरगमनमभ्यधाय्यष्टषष्टितमे ६८

अथ केकयनगरे भरतेन तस्यामेव रात्रौ दृष्टस्य दुःस्वप्नस्य प्रातः सुहृद्भ्यः कथनमुपापाद्येकोनसप्ततितमे ६९

अथ तदैव दूतैः प्रचोदितस्य मातामहमातुलदत्तनानाविधपरिजनपरिच्छदसेनादिकस्य भरतस्यायोध्यां प्रति प्रस्थानमाचख्यौ सप्ततितमे ७०

अथ भरतस्य मार्गे नानानदीनगरग्रामवनमहीधराद्यतिक्रमणपूर्वकमविरतसप्तरात्रगमनेनायोध्यां प्रविशतो नगरविषाददर्शनपरिक्षुभितमनसः पितृभवनगमनमभाष्येकसप्ततितमे ७१

अथ कृतवन्दनाय पितृवृत्तान्तं पृच्छते भरताय कैकेय्या पितृमरणकथनं, ततः शोचन्तमग्रजं पृच्छन्तं प्रति स्वकृतरामविवासनकथनपूर्वकं राज्याङ्गीकरणनियोजनमित्येतदभ्यलापि द्विसप्ततितमे ७२

अथ पितृमरणाग्रजप्रवासनश्रवणविलुप्तधैर्येण प्रवृद्धशोकेन च भरतेन मृदुतया कैकेयीविनिन्दनमुक्तवान् त्रिसप्ततितमे ७३

अथ प्रवृद्धरोषेण क्रूरतया कैकेयीविनिन्दनं, कर्षणक्लिश्यमानकवृषभदर्शनविषण्णसुरभिनिदर्शनेन कौसल्याशोकमहत्ताकथनपूर्वकं शोकेन मूर्च्छनमितीदं भाषितवांश्चतुःसप्ततितमे ७४

अथ भरतशत्रुघ्नयोः कौसल्यासमागमं, तस्याः प्रत्यायनाय भरतेन विस्तरेण शपथकरणम्, ततस्तस्याः प्रत्ययपूर्वकं भरतशत्रुघ्नाभ्यां सह शोकेनैव रात्र्यतिवाहनं च प्रतिपादितवान् पञ्चसप्ततितमे ७५

अथ परेद्युर्वसिष्ठचोदितेन भरतेन दशरथसंस्कारकरणमुपपादितवान् षट्सप्ततितमे ७६

अथ भरतेन द्वादशेऽहनि सापिण्डीकरणान्तश्राद्धकरणं त्रयोदशेऽहनि पितरमुद्दिश्य भरतशत्रुघ्नयोर्बहुशोचनं, वसिष्ठसुमन्त्रादिभिस्तयोः समाश्वासनं, तद्देशाचारभूतदहनदेशसेचनादिनियोजनं चाभिहितवान् सप्तसप्ततितमे ७७

अथ शत्रुघ्नेन मन्थराशिक्षणं, कैकेय्या मन्थराश्वासनं च प्रकाशितवान् अष्टसप्ततितमे ७८

अथामात्यादिभिर्भरतं प्रति राज्याङ्गीकरणप्रार्थनम्, भरतेन तदनभ्युपगम्य स्वस्य रामनिवर्तनोद्योगकथनपूर्वकं मार्गशोधनाय तदौपयिकजनप्रेषणनियोजनं च बोधितवान् एकोनाशीतितमे ७९

अथायोध्यामारभ्य आजाह्नवीतीरं मार्गसमीकरणं जल्पितवानशीतितमे ८०

अथापरेद्युः प्रभाते राजप्रबोधनार्थमङ्गलवाद्यघोषश्रवणसंधुक्षितपितृमरणाग्रजविवासनस्मरणस्य भरतस्य शोकातिशयम्, प्रातः सभामागतेन वसिष्ठेन सुमन्त्रद्वारा भरतशत्रुघ्नामात्यप्रधानाद्यशेषराजवल्लभाह्वानम्, तेषां सभाप्रवेशं चाख्यातवानेकाशीतितमे ८१

अथ सभायां वसिष्ठेन राज्याङ्गीकरणमर्थितेन तावदसहनकृततन्निन्दनेन तीव्रतमस्वीयरामनिवर्तनाभिलापकथनानन्दितनिखिलजनेन तेन भरतेन वसिष्ठादिभिः कौसल्यादिभिरमात्यादिभिरखिलपौरवर्गैश्च सह रामसमीपगमनं प्रति प्रस्थानं कथितवान् द्व्यशीतितमे ८२

अथ तीव्रतमरामदर्शनोत्कण्ठ्यमातृजनप्रमुखपरिवृतस्य भरतस्य ससैन्यस्य प्रस्थितस्य गङ्गातीरेऽवस्थानं प्रकाशितवान् त्र्यशीतितमे ८३

अथ तत्र भरतं प्रति गुहेनातिथ्याभ्यर्थनं दर्शितवांश्चतुरशीतितमे ८४

अथ भरतागमननिमित्तं भरतमुखेन ज्ञातवता गुहेनाग्रजमनुशोचतो भरतस्य समाश्वासनमुदितवान् पञ्चाशीतितमे ८५

अथ तत्र रामावस्थानसमये रात्रौ लक्ष्मणस्य सीतारामयोर्भूमिशयनादिकं प्रत्याप्रभातं शोचनम्, सूर्योदयानन्तरं रामलक्ष्मणयोर्जटाकरणपूर्वकं भागीरथीमुत्तीर्य वने गमनं च गुहेन भरतायोक्तमित्याह षडशीतितमे ८६

अथ तच्छ्रवणजनितशोकातिशयं भरतं प्रति गुहेन तत्र पूर्वं रामस्य जलमात्रकृताहारस्य सीतया सह दर्भास्तीर्णे इङ्गुदीवृक्षमूले शयनं, तदानीं स्वस्य ज्ञातिजनपरिवृतस्य लक्ष्मणेन सह जागरणपूर्वकं रक्षणं च कथितमित्याह सप्ताशीतितमे ८७

अथ दर्भास्तीर्णं तत्र तत्र विकीर्णसीताभरणगलितकनकबिन्दुकं सीतापरिवर्तनदशासक्ततत्कौशेयतन्तुकमिङ्गुदीमूलमुद्वीक्ष्य भरतस्यानुशोचनमाहाष्टाशीतितमे ८८

अथ ससैन्यस्य भरतस्य गङ्गातरणं भरद्वाजाश्रमप्रवेशं चाह एकोननवतितमे ८९

अथ भरतस्य भरद्वाजदर्शनमन्योन्यकुशलप्रश्नादिकं चाह नवतितमे ९०

अथ भरतस्य ससैन्यस्य भरद्वाजेन कृतमातिथ्यमाहैकनवतितमे ९१

अथ भरतस्य चित्रकूटं प्रति प्रस्थानसमये भरद्वाजं प्रति कौसल्यादिव्यक्तिनिर्देशनम्, ततो भरद्वाजमनुज्ञाप्य चित्रकूटं प्रति प्रयाणम्, मध्ये यमुनातीरवनप्रवेशं चाह द्विनवतितमे ९२

अथ भरतस्य चित्रकूटप्रान्तवनप्रवेशम्, वसिष्ठं प्रति भरद्वाजोक्तस्थलचिह्नप्रत्यभिज्ञापनम्, शत्रुघ्नं प्रति वनवर्णनपूर्वकं रामाश्रमान्वेषणचोदनम्, ततः शत्रुघ्नप्रेषितैः पुरुषै रामाश्रमधूमचिह्नप्रदर्शनं, भरताय तत्कथनं, ततो भरतेन तत्रैव सेनास्थापनं चाह त्रिनवतितमे ९३

अथ रामस्य चित्रकूटप्रवेशप्रभृतितद्दिनपर्यन्तवृत्तान्तस्य प्रतिदिनमेकरूपतया तदहर्वृत्तान्तकथनेन यावद्दिनवृत्तान्तोऽपि कथितः स्यादिति कृत्वा तस्मिन्नहनि रामेण प्रातरनुष्ठानानन्तरं सीतां प्रति चित्रकूटरामणीयकप्रदर्शनपूर्वकमनुकूलपत्नीभ्रातृलाभेन तादृशरमणीयस्थललाभेन चायोध्यातोऽधिकं निर्वृतिः कथितेत्याह चतुर्नवतितमे ९४

अथ रामेण सीतायाः मन्दाकिन्याख्यनदीरामणीयकप्रदर्शनेनोपलालनमाह पञ्चनवतितमे ९५

अथ तत्र रामस्य सीतया साकं मांसाभ्यवहारसमये वन्यमृगयूथसंक्षोभदर्शनेन तत्कारणपरिज्ञानाय लक्ष्मणप्रेरणम्, तत उन्नतं सालमारुह्य कोविदारध्वजदर्शनेन ससैन्यतया रामस्य हननायागतं भरतं मन्वानेन लक्ष्मणेन रामप्रेम्णा भरतजिघांसापर्यन्तमतिशङ्कनं चाह षण्णवतितमे ९६

अथ रामेण कुपितस्य लक्ष्मणस्य परिसान्त्वनमाह सप्तनवतितमे ९७

अथ भरतस्य शत्रुघ्नगुहतज्ज्ञातिसहितस्य पादचारेण रामाश्रमान्वेषणं, तच्चिह्नधूमदर्शनानन्तरं पुनस्तत्रागतजनस्थापनपूर्वकं गुहं शत्रुघ्नं चादायगमनमाहाष्टनवतितमे ९८

अथ भरतस्य मातृजनानयनाय वसिष्ठं संदिश्याग्रे गच्छतः शत्रुघ्नं प्रति रामाश्रमचिह्नानि निर्दिशतो रामदुर्दशामनुशोचतः शत्रुघ्नसुमन्त्रसहितस्य रामसमागममाहैकोनशततमे ९९

अथ रामेण कुशलप्रश्नव्याजेन भरतस्य भाविराज्यरक्षणौपयिकतया राजनीतिशिक्षणमाह शततमे १००

अथ भरतेन रामं प्रति दशरथमरणकथनमाहैकोत्तरशततमे १०१

अथ रामेण मृतं दशरथमुद्दिश्य शोकप्रलापं, मन्दाकिन्यां सलिलदानं, सपिण्डीकरणं, पुना रामाश्रममागतानां रामादीनां शोकप्रलापं, तच्छ्रवणेनागतानां भरतसैनिकायोध्यकजनानां रामेण समागमं चाह द्व्युत्तरशततमे १०२

अथ रामस्य वसिष्ठानीतैर्मातृजनैः समागमं, वसिष्ठसेवनं, निखिलामात्यादिजनसमागमं, सर्वेषामपि तत्र समुपवेशनं चाह त्र्युत्तरशततमे १०३

अथ रामेण वनागमननिमित्तं पृष्टस्य भरतस्य रामं प्रति राज्याङ्गीकारप्रार्थनम्, रामेण पितृनियोगदुस्त्यजत्वप्रतिपादनेन समाधानं चाह चतुरुत्तरशततमे १०४

अथ पुनर्भरतेन स्वमातृसान्त्वनादिकथनेन पुनः प्रार्थनं, रामेण तत्त्वार्थविमर्शनमार्गेण समाधानं चाह पञ्चोत्तरशततमे १०५

अथैवं निरुत्तरमुक्तवन्तं रामं प्रति भरतस्य श्लाघ्यतरोचितोत्तरकथनपूर्वकं पुनः प्रार्थनं, वसिष्ठादीनां मातृजनानाममात्यानां पुरप्रधानानां च भरतेन सह रामप्रार्थनं चाह षडुत्तरशततमे १०६

अथ काममोहेन पित्रा भवद्विवासनं कृतमिति पितरं निन्दन्तं भरतं प्रति रामेण मोहहेतुप्रसक्तिरेव नास्ति किंतु कैकेयीविवाहकाले तत्सुतस्य राज्यदानप्रतिज्ञानादेवैवं कृतवानिति दुष्परिहारहेत्वन्तरकथनमाह सप्तोत्तरशततमे १०७

अथैवं रामेण निरुत्तरीकृतं भरतमालोक्य हितपरतया जाबालिना चार्वाकमतमाश्रित्य रामं प्रति राज्याङ्गीकरणप्रार्थनमाहाष्टोत्तरशततमे १०८

अथ जाबालिमतनिरासनपूर्वकं रामेण वैदिकमतस्थापनमाह नवोत्तरशततमे १०९

अथ वसिष्ठेन जाबालिवचनतात्पर्यप्रदर्शनेन तद्विषये रामकोपं निवर्त्य मनुप्रभृति दशरथपर्यन्तं पूर्वाचरितमार्गप्रदर्शनेन ज्येष्ठस्यैव राज्यार्हताकथनरूपं रामनिवर्तनोपायमाह दशोत्तरशततमे ११०

अथ वसिष्ठेन स्ववचनमाचार्यवचनतयाऽवश्यं करणीयमिति रामं प्रत्युक्तिं, रामेण पितृवचनं ततोऽपि गुरुतरमिति प्रत्युक्तिं, भरतस्य गत्यन्तराभावात् स्थण्डिलशयनं, रामेण तन्निवर्तनपूर्वकं भरतसमाधानं चाहैकादशोत्तरशततमे १११

अथ भरतस्य समाधानं कृत्वा प्रस्थापनमाह द्वादशोत्तरशततमे ११२

अथ भरतस्यायोध्याप्रवेशमाह त्रयोदशोत्तरशततमे ११३

अथ भरतस्यायोध्यानिरानन्दतादर्शनेन शोकोत्पत्तिमाह चतुर्दशोत्तरशततमे ११४

अथ भरतस्यायोध्यां विसृज्य नन्दिग्रामे रामपादुकापुरस्करणपूर्वकं राज्यपरिपालनक्रममाह पञ्चदशोत्तरशततमे ११५

अथ चित्रकूटे रामं प्रति तत्र राक्षसकृतोपद्रवकथनपूर्वकमृषिसंघैः सहर्षिकुलपतेस्तदाश्रमं विसृज्याश्रमान्तरगमनमाह षोडशोत्तरशततमे ११६

अथ श्रीरामस्यात्र्याश्रमप्रवेशमाह सप्तदशोत्तरशततमे ११७

अथ सीतयाऽनसूयोपदिष्टपातिव्रत्यधर्मप्रतिपादकवचनानुमोदनपूर्वकं तत्पृष्टस्वस्वयंवरकथाकथनमाहाष्टादशोत्तरशततमे ११८

अथ रामस्यात्र्याश्रमे रात्रिमुषित्वा प्रभाते नित्यकर्मानुष्ठानानन्तरमृषिगणदर्शितमार्गेण दण्डकारण्यं प्रति प्रस्थानमाहैकोनविंशत्युत्तरशततमे ११९

एवमयोध्याकाण्डानुक्रमणिका संपूर्णा ।

॥ श्रियै नमः ॥

# श्रीवैष्णवानां श्रीरामायणपठनोपक्रमानुसन्धेयक्रमः ।

प्रथमतः स्वस्वसंप्रदायनिर्वाहकाचार्यानुसन्धानम् । ततः लक्ष्मीनाथेत्यारभ्य प्रणतोऽस्मि नित्यमित्यन्तम् । अनन्तरं श्रीशैलपूर्णविषयं पितामहस्येति श्लोकमारभ्य श्रीभाष्यकारप्रभृतिस्वाचार्यपर्यन्तविषयाः साम्प्रदायिकश्लोका अनुसन्धेयाः ॥

यद्वा श्रीधरादिस्वाचार्यपर्यन्ताः प्रतिव्यक्ति श्लोका अनुसन्धेयाः ॥

ततः, कूजन्तं रामरामेति मधुरं मधुराक्षरम् । आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥ वाल्मीकेर्मुनिसिंहस्य कवितावनचारिणः । शृण्वन् रामकथानादं को न याति परां गतिम् ॥ यः पिबन्सततं रामचरितामृतसागरम् । अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥ गोष्पदीकृतवाराशिं मशकीकृतराक्षसम् । रामायणमहामालारत्नं वन्देऽनिलात्मजम् ॥ अञ्जनानन्दनं वीरं जानकीशोकनाशनम् । कपीशमक्षहन्तारं वन्दे लङ्काभयंकरम् ॥ मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् । वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ उल्लङ्घ्य सिन्धोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः । आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥ आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् । पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् । बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ वेदवेद्ये परे पुंसि जाते दशरथात्मजे । वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ तदुपगतसमाससन्धियोगं सममधुरोपनतार्थवाक्यबद्धम् । रघुवरचरितं मुनिप्रणीतं दशशिरसश्च वधं निशामयध्वम् ॥ श्रीराघवं दशरथात्मजमप्रमेयं सीतापतिं रघुकुलान्वयरत्नदीपम् । आजानुबाहुमरविन्ददलायताक्षं रामं निशाचरविनाशकरं नमामि ॥ वैदेहीसहितं सुरद्रुमतले हैमे महामण्डपे मध्येपुष्पकमासने मणिमये वीरासने सुस्थितम् । अग्रे वाचयति प्रभञ्जनसुते तत्त्वं मुनिभ्यः परं व्याख्यान्तं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ ततो यथाशक्ति श्रीकोशोपरि भगवदाराधनं कर्तव्यम् ॥

| | |
|---|---|
| अथ भरतेन रामं प्रति दशरथमरणकथनमाहैकोत्तरशततमे | १०१ |
| अथ रामेण मृतं दशरथमुद्दिश्य शोकप्रलापं, मन्दाकिन्यां सलिलदानं, सपिण्डीकरणं, पुना रामाश्रममागतानां रामादीनां शोकप्रलापं, तच्छ्रवणेनागतानां भरतसैनिकायोध्यकजनानां रामेण समागमं चाह द्व्युत्तरशततमे | १०२ |
| अथ रामस्य वसिष्ठानीतैर्मातृजनैः समागमं, वसिष्ठसेवनं, निखिलामात्यादिजनसमागमं, सर्वेषामपि तत्र समुपवेशनं चाह त्र्युत्तरशततमे | १०३ |
| अथ रामेण वनागमननिमित्तं पृष्टस्य भरतस्य रामं प्रति राज्याङ्गीकारप्रार्थनम्, रामेण पितृनियोगदुस्त्यजत्वप्रतिपादनेन समाधानं चाह चतुरुत्तरशततमे | १०४ |
| अथ पुनर्भरतेन स्वमातृसान्त्वनादिकथनेन पुनः प्रार्थनं, रामेण तत्त्वार्थविमर्शनमार्गेण समाधानं चाह पञ्चोत्तरशततमे | १०५ |
| अथैवं निरुत्तरमुक्तवन्तं रामं प्रति भरतस्य श्लाघ्यतरोचितोत्तरकथनपूर्वकं पुनः प्रार्थनं, वसिष्ठादीनां मातृजनानाममात्यानां पुरप्रधानानां च भरतेन सह रामप्रार्थनं चाह षडुत्तरशततमे | १०६ |
| अथ काममोहेन पित्रा भवद्विवासनं कृतमिति पितरं निन्दन्तं भरतं प्रति रामेण मोहहेतुप्रसक्तिरेव नास्ति किंतु कैकेयीविवाहकाले तत्सुतस्य राज्यदानप्रतिज्ञानादेवैवं कृतवानिति दुष्परिहारहेत्वन्तरकथनमाह सप्तोत्तरशततमे | १०७ |
| अथैवं रामेण निरुत्तरीकृतं भरतमालोक्य हितपरतया जाबालिना चार्वाकमतमाश्रित्य रामं प्रति राज्याङ्गीकरणप्रार्थनमाहाष्टोत्तरशततमे | १०८ |
| अथ जाबालिमतनिरासनपूर्वकं रामेण वैदिकमतस्थापनमाह नवोत्तरशततमे | १०९ |
| अथ वसिष्ठेन जाबालिवचनतात्पर्यप्रदर्शनेन तद्विषये रामकोपं निवर्त्य मनुप्रभृति दशरथपर्यन्तं पूर्वाचरितमार्गप्रदर्शनेन ज्येष्ठस्यैव राज्यार्हताकथनरूपं रामनिवर्तनोपायमाह दशोत्तरशततमे | ११० |
| अथ वसिष्ठेन स्ववचनमाचार्यवचनतयाऽवश्यं करणीयमिति रामं प्रत्युक्तिं, रामेण पितृवचनं ततोऽपि गुरुतरमिति प्रत्युक्तिं, भरतस्य गत्यन्तराभावात् स्थण्डिलशयनं, रामेण तन्निवर्तनपूर्वकं भरतसमाधानं चाहैकादशोत्तरशततमे | १११ |
| अथ भरतस्य समाधानं कृत्वा प्रस्थापनमाह द्वादशोत्तरशततमे | ११२ |
| अथ भरतस्यायोध्याप्रवेशमाह त्रयोदशोत्तरशततमे | ११३ |
| अथ भरतस्यायोध्यानिरानन्दतादर्शनेन शोकोत्पत्तिमाह चतुर्दशोत्तरशततमे | ११४ |
| अथ भरतस्यायोध्यां विसृज्य नन्दिग्रामे रामपादुकापुरस्करणपूर्वकं राज्यपरिपालनक्रममाह पञ्चदशोत्तरशततमे | ११५ |
| अथ चित्रकूटे रामं प्रति तत्र राक्षसकृतोपद्रवकथनपूर्वकमृषिसंघैः सहर्षिकुलपतेस्तदाश्रमं विसृज्याश्रमान्तरगमनमाह षोडशोत्तरशततमे | ११६ |
| अथ श्रीरामस्यात्र्याश्रमप्रवेशमाहसप्तदशोत्तरशततमे | ११७ |
| अथ सीतयाऽनसूयोपदिष्टपातिव्रत्यधर्मप्रतिपादकवचनानुमोदनपूर्वकं तत्पृष्टस्वस्वयंवरकथाकथनमाहाष्टादशोत्तरशततमे | ११८ |
| अथ रामस्यात्र्याश्रमे रात्रिमुषित्वा प्रभाते नित्यकर्मानुष्ठानानन्तरमृषिगणदर्शितमार्गेण दण्डकारण्यं प्रति प्रस्थानमाहैकोनविंशत्युत्तरशततमे | ११९ |


एवमयोध्याकाण्डानुक्रमणिका संपूर्णा ।

